# ॥ श्रीशनिरक्षास्तवः ॥

## ॥ पूर्वपीठिका ॥

श्रीनारद उवाच ।
ध्यात्वा गणपतिं राजा धर्मराजो युधिष्ठिरः ।
धीरः शनैश्चरस्येमं चकार स्तवमुत्तमम् ॥

## ॥ मूलपाठः ॥

## ॥ विनियोगः ॥

ॐ अस्य श्रीशनिस्तवराजस्य सिन्धुद्वीप ऋषिः । गायत्री छन्दः ।
श्रीशनैश्चर देवता । श्रीशनैश्चरप्रीत्यर्थे पाठे विनियोगः ॥

## ॥ ऋष्यादिन्यासः ॥

शिरसि सिन्धुद्वीपर्षये नमः । मुखे गायत्रीछन्दसे नमः ।
हृदि श्रीशनैश्चरदेवतायै नमः ।
सर्वाङ्गे श्रीशनैश्चरप्रीत्यर्थे विनियोगाय नमः ॥

## ॥ स्तवः ॥

शिरो मे भास्करिः पातु भालं छायासुतोऽवतु ।
कोटराक्षो दृशौ पातु शिखिकण्ठनिभः श्रुती ॥
घ्राणं मे भीषणः पातु मुखं बलिमुखोऽवतु ।
स्कन्धौ संवर्तकः पातु भुजो मे भयदोऽवतु ॥
सौरिर्मे हृदयं पातु नाभिं शनैश्चरोऽवतु ।
ग्रहराजः कटिं पातु सर्वतो रविनन्दनः ॥
पादौ मन्दगतिः पातु कृष्णः पात्वखिलं वपुः ॥

## ॥ फलश्रुतिः ॥

रक्षामेतां पठेन्नित्यं सौरेर्नामाबलैर्युतम् ।
सुखी पुत्री चिरायुश्च स भवेन्नात्र संशयः ॥

॥  इति श्रीशनिरक्षास्तवः ॥